दात्तः । इति प्रागाय शक्त्यक्षरं बीजाक्षरं चतुरावृत्तं कृत्वा इं हं उदात्तः । इं हं अनुदात्तः । पुनः इं हं उदात्तः इं हं अनुदात्तः । ततः प्रथमपादगानम् । उग्रं उदात्तः वीरं अनुदात्तः महा अनुदात्तः विष्णुं अनुदात्तः इति गात्वा पुनः प्रणवगानम् । ततः ॐ इं हं उग्रं वीरं महाविष्णुं ॐ आनन्दात्मने श्वेतवर्णाय अङ्गुष्ठाभ्यां नमः। इति हस्तयोरङ्गुष्ठे न्यासः। ततः। ज्वलं उदा। तं स । अनु । र्व्वतो । उदा । मुखं । अनु । इति प्रागाय। ॐ ह्रीं घृणिः सूर्य्यः आदित्यः श्रीं ज्वलन्तं सर्व्वतोमुखं प्रियात्मने कृष्णवर्णाय तर्जनीभ्यां स्वाहा । इति न्यासः । ततः नृसिं उदा । हं भी अनु । षणं उदात्तः । भद्रं अनु । "ॐ भूर्लक्ष्मी भुवर्लक्ष्मीः सुवः कालकर्णी । तन्नो महालक्ष्मीः प्रचोदयात् ।" इति सामरहितमुक्त्वा पुनः तृतीयपादं यजुर्लक्ष्मीपूर्व्वकमुक्त्वा घोरात्मने पिङ्गलवर्णाय मध्यमाभ्यां वषट्। इति न्यासः । ततः मृत्यु उदा । मृत्युं अनु । नमा उदा । म्यहं अनुदा । इति गात्वा ॐ नृ उदा । सिंहा अनु । यवि उदा । द्महे अनु । वज्र उदा । नखा अनु । यधी उदा । महो अनुदा । तन्न उदा । सिंहः प्रचो उदा । दयात् अनुदा । इति गात्वा ॐ नृसिंहाय विद्महे वज्रनखाय धीमहि तन्नः सिंहः प्रचोदयात् इत्युक्त्वा मृत्युमृत्युं नमाम्यहं मायात्मने हेमवर्णाय अनामिकाभ्यां हुं इति न्यासः । ततः प्रणवशक्तिबीजसाममन्त्रपादचतुष्टयसाममिश्रणं सामानि गात्वा प्रणवशक्तिबीजपुटितं मन्त्रमुच्चार्य्य महाचक्रं स्मृत्वा ज्ञानात्मने विद्युद्वर्णाय कनिष्ठाभ्यां वौषट्। इति न्यासः ।

## अथानुष्टुप-साम।

प्रथमं प्रणवसाम ततः शक्तिबीजसाम ततः प्रथमपादसाम ततः पुनरङ्गप्रणवसाम गात्वा द्वितीयसामगानम्। ततो घृणि-मन्त्रस्य सामरहितस्य पाठः। ततस्तृतीयपादसाम। ततो यजुर्लक्ष्मीमन्त्रस्य सामरहितस्य पाठः। ततश्चतुर्थपादसाम। नृसिंहगायत्रीसाम। इति गात्वा मिश्रणसामगानम्। उच्चैरेवम्। ततः प्रणवप्रथममात्रा ततो बीजाक्षरम्। कनिष्ठामूले। ततः प्रणवद्वितीयमात्रा ततः शक्त्यक्षरम्। प्रणवतृतीयमात्रा ततो बीजाक्षरम्। प्रणवचतुर्थमात्रा ततः शक्त्यक्षरम्। इत्यष्टाक्षराणि। अ ह्रं उदा। उ ह्रं। अनु। म ह्रं उदा। ॐ ह्रं अनु। इति गात्वा। अनेनानुष्टुभेन साम्ना समं व्यापको न्यासः सम्पाद्यतामिति न्यासः।

---

## अथ षट्स्वरसामभिरङ्गन्यासः।

तत्र प्रथमाक्षरद्वयमुदात्तं तर्ज्जन्यग्रस्पर्शेन। तृतीयमनुदात्तं कनिष्ठामूलस्पर्शेन। चतुर्थः स्वरितः तर्जन्यादिचतुष्कमध्यपर्व्व-स्पर्शेन। तर्जन्याद्यङ्गुलमध्यपर्व्वस्पर्शकाले उत्तरोत्तमस्यानुदात्तत्वम्। एकैकाङ्गुलिपर्व्वस्पर्शकाले त्रिचतुःपञ्चमात्रा स्वरितमप्येवं षष्ठमनु-दात्तं तर्ज्जनीमध्यपर्व्वस्पर्शेन गेयम्। प्रणवसाम। अउ उदा। म अनु। ॐ स्वरितः। अ स्वरितः। उ उदा। मॐ अनु। शक्तिबीजसाम। ह्रं ह्रं उदा। ह्रं अनु। ह्रं स्वरितः। ह्रं

स्वरितः । हं अनु । प्रथम पादसाम,—उग्रं उदा । वी अनु । रं स्वरि । महा उदा । विष्णुं अनु । गात्वा । तत्र तृतीयषष्ठा- चरयोर्वामहस्ताङ्गुलिवक्रीकरणात्मकं ग्रहणं प्रथमपादगाने । पुनः प्रणवसाम ।

इति श्रीमहामहोपाध्यायाग्निचिद्-वाजपेयि-नरसिंह- विरचिते नित्याचारप्रदीपे नरसिंहोपासना ।

इति प्रथमभागकृत्यं समाप्तम् ।

श्रीनृसिंह उद्धारकरिवे ।

श्रीनृसिंहाय नमः ।



# नित्याचारप्रदीपस्य प्रथमभागस्य विषयसूचिः ।

इति ।

५२३ पत्रात् ५३३ पत्राणि सूर्य्यस्य दर्शनादिफलनामक-विषयस्य पूजास्वरूपविनिर्णयनामकविषयस्य सूर्य्यस्य गन्ध-पुष्प-धूप-दीप-नैवेद्य-नानाविधद्रव्यदाननामकविषयाणां सौरधर्म्मेति नामकविषयस्य च पाठान्तरार्थं द्रष्टव्यानि।

५३५ पत्रात् ५५२ पत्राणि शिवस्य घृतकम्बलविधि-घृतकम्बलाभिषेक–घृतधारा-महास्नान-दर्शनादिफल-गन्ध-पुष्प-धूप-दीप-नैवेद्येत्यादिनामकविषयाणां शिवप्रदेयशिव-धर्म्मेतिनामक-विषयद्वयस्य च पाठान्तरार्थं द्रष्टव्यानि।

५५४, ५५५ पत्रे ब्रह्मणो गन्ध-व्यजन-पुष्प-नैवेद्येतिनामक-विषयाणां ब्रह्मधर्म्मेति नामकविषयस्य च पाठान्तरार्थं द्रष्टव्ये।

५६६ पत्रात् ५७० पत्राणि विष्णोर्म्महास्नान-महा-स्नानप्रयोगाष्टविधजलस्नानेतिनामकविषयत्रयस्य पाठान्तरार्थं द्रष्टव्यानि।

तान्येतेषां पाठान्तराणि प्रायशः प्रमादबहुलानि।

---

